मनसोऽपि लयः प्राणे मनोवृत्तिलयो मः
तेजसि प्राण इत्यत्र जीवद्वारा तु तेजसि
उत्क्रान्तिः सगुणज्ञस्य कार्यलोकाप्तिवर्णना
पुनर्जन्मश्रुतेस्तेजः परस्यामिति वृत्तिगा ॥
निर्विशेषविदो देहान्नोत्क्रान्तिः प्रतिषेधनात् ।
विद्वद्दृशा कलानां स्याल्लयः पुरुष एव हि ॥
निरन्वयो लयस्तासामज्ञानविगमाद्भवेत् ॥ ८ ।
सगुणज्ञस्य मूर्द्धन्यनाड्यैव सरणं श्रुतेः ॥ ९ ॥
निश्यौष्ण्यदृष्टेस्तत्प्रेतो रश्मीनेत्यविशेषतः ॥ १० ॥
उत्तरायणदेवं स गच्छेत्प्रेतोऽपि दक्षिणे ॥ ११ अधि

इति लघुवार्त्तिके चतुर्थस्य द्वितीयः ॥

अर्चिरादिर्मार्ग एको नानापर्वत्वसम्भवात् ॥ १ ॥
वायुरब्दोर्ध्वदेवोर्ध्वस्ततः सूर्यगतिश्रुतेः ॥ २ ॥
विद्युतो वरुणस्तस्मादिन्द्रस्तस्मात्प्रजापतिः ॥ ३ ॥
साभिपिण्डिते गत्ययोगान्नेतारो ह्यर्चिरादयः ॥ ४ ॥
यद्ब्रह्म येन ध्यातन्तं तद्ब्रह्मामानवो नयेत् ॥ ५ ॥
अमानवः पुमान्नैव प्रतीकालम्बनान्नयेत् ॥६ अधिकरणानि

इति लघुवार्त्तिके चतुर्थस्य तृतीयः ॥

स्वेन रूपेण निष्पत्तिर्निर्विशेषस्वरूपतः ॥ १ ॥
ब्रह्मभेदेन निष्पत्तिर्योगानामिव नेष्यते ॥ २ ॥
स्वदृष्ट्या निर्विशेषोऽपि परदृष्ट्येश्वरो भवेत् ॥ ३ ॥
सङ्कल्पमात्रात्पित्रादेरुत्थानं श्रुतितो मितेः ॥ ४ ॥
विद्वत्सङ्कल्पतः स्यातामदेहत्वसदेहते ॥ ५ ॥
देहित्वे समनस्कस्य तस्य सङ्कल्पनाद्भुजिः ॥ ६ ॥

लघुवार्त्तिकम् ।

...ष्टिप्रक्रमे विश्रुताज्जगत् ॥७ अधिकरणानि ॥

...ार्त्तिके चतुर्थस्य स्तुर्थः ॥

...ान्तमीमांसादुग्धसागरात् ॥

...मारश्चन्द्रालो समर्पितः ॥ १ ॥

...ादरायणकृते तन्त्रद्वये ये नयाः
...स्तु शङ्करनिबद्धैः स्पष्टीकृता विस्तरम् ।
यथामतीह सुगमैः शब्दैः प्रकाशीकृताः
...तेर्विशालनयनानाथस्य तुष्ट्यै सदा ॥ २ ॥

श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्द-
मुनिवरकिङ्करेणोत्तमश्लोकयतिना विरचितं
लघुवार्त्तिकं समाप्तम् ।



